श्री गणेशशारदागुरुभ्यो नमः

## ॥ प्रियं भारतम् ॥ १ ॥

भारतदेशोऽयमस्माकं जन्मभूमिः। भूगोले निखिलेऽपि राष्ट्रमिदं विशिष्टमेव भवति।

अस्य देशस्य भारतवर्षः भरतखण्डं आर्यावर्त इत्यपि नामानि भवन्ति। आदिकालात् प्रभृति प्राणिनां जीवनसौकर्यं अस्मिन् एव भूप्रदेशे सुलभं सुकरं चासीद् यतोऽत एवात्र देशे नैककोटिसंख्याः प्रजाः प्रतिवसन्ति स्म। अतः चिरन्तनोऽयं देश इति लोकप्रतीतिरस्ति।

पूर्वयुगे भरतो नाम राजर्षिः स्वप्रतापेन सर्वान् दिग्देशान् विजित्य राष्ट्रमखण्डैकचक्रं कृत्वा स्वनामाङ्कितं च विधाय सार्वभौमनाम्ना शशासेति श्रूयते। अत एव भारतमखण्डं राष्ट्रमिति, अत्रत्या जनाः सर्वेऽपि भारतीया इति च प्रतीतिर्भवति। अस्माकं पूर्वजानामार्याणां भारतमेव जन्मभूमिरत एवास्य आर्यभूमिरिति च नाम प्रथितम्।

बहुविशालेऽस्मिन् राष्ट्रे नाना जनपदभागाः सन्ति। विविधमतीया जनाः प्रतिवसन्ति। विभिन्नभाषाभाषिणो नराः

विद्यन्ते। अथापि एते सर्वे भारतमेव स्वजन्मभूमिरिति स्वयं च भारतीया इत्येव संमन्यन्ते।

महत्तरस्यास्य राष्ट्रस्य पूर्व पश्चिम दक्षिणदिक्षु समुद्रः सीमा। उत्तरदिशि पर्वतराजो हिमालयः सीमास्ते। एवं नैसर्गिकविभागे देशे विन्ध्याद्रिः सह्याद्रिः मलयाचलःश्रीशैलः इत्यादयो गिरयः, तेभ्यश्च गङ्गा यमुना गोदावरी नर्मदा कावेरीत्याद्या महानद्यः प्रभवन्ति। वाराणसी हरिद्वारं प्रयागः गोकर्णं रामेश्वरं इत्यादीनि पुण्यक्षेत्राणि देहली मुम्बई कलिकता मद्रास इत्यादीनि महान्ति सुन्दराणि परश्शतानि नगराणि। तेषु देहलीपत्तनं प्रधानम्।

वयमस्य देशस्यान्नाहारं खादामः। जलं पिबामः। वायुं च सेवामहे। जन्मजीवनं स्थितिर्गतिश्चेति सर्वमत्रैव भवतीत्यतो भारतमेवास्माकं जन्मभूमिः मातृभूमिश्च। माता यथा पूज्या सेव्या तथैव मातृभूमिरपीति न कदापि विस्मर्तव्यम्। अत एव भारतीयो वीरपुत्रः श्रीराम एवमाह — अपि स्वर्णमयी लङ्का न मे लक्ष्मण रोचते। जननी जन्मभूमिश्च स्वर्गादपि गरीयसीति॥

## ॥ रुचिरं प्रभातम् ॥ २ ॥

अहो प्रभातम् । अद्य दिवा भवति । इदानीं तमः नास्ति । निशा च अपगच्छति । सद्यः प्रकाशः सर्वतः प्रसरति । पश्य, पूर्वदिग् लोहिता वर्तते । क्षणेन सूर्यः उदेति । प्रभातकाले वायुः मन्दमन्दं वाति । चन्द्रः अस्तं गच्छति ।

सूर्योदयात्पूर्वं कुक्कुटः रौति । ततः शीघ्रं पक्षिणः उत्तिष्ठन्ति । तेऽपि मधुरं कूजन्ति । ते किमिति कूजन्ति ? अहं जानामि । वदामि शृणु । सद्यः भगवान् श्रीसूर्यनारायणः इमं लोकं समागच्छतीति तं भगवन्तं स्वागतगानैः संस्तुवन्ति ।

ग्रामान्तरभागे प्रभातकालोऽतीव रमणीयः । इतस्तावत् ग्रामं पश्य । गोष्ठे धेनुः सुखेन तिष्ठति, सानन्दं रोमन्थं च वर्तयति । मातुः समीपे गोवत्सोऽपि तिष्ठति, स च सानन्दमुत्पतति । असौ पुरुषो गोपालकः । सः गोभ्यो तृणभक्ष्यं यवसपिण्याकादि च यच्छति । गोपालः सायं प्रातः गोक्षीरं दोग्धि । सा तस्य स्त्री क्षीरमपनयति । सा क्षीरं दधि च विक्रीणाति धनं च सम्पादयति । प्रभूतक्षीरहेतोश्च गोपालः महिषीः अजाश्च पालयति । अजाक्षीरमारोग्यं भवति ।

महिषीक्षीरं मधुरं वर्तते। गोक्षीरममृतमस्ति। क्षीरेण दधि, दध्ना नवनीतं नवनीतेन घृतं च भवति। तानि वस्तूनि मधुराणि भवन्ति।

ग्रामाद् बहिस्तत्र दूरे पश्य। कर्षकाः कर्मकरास्तत्र क्षेत्रकेदारेषु कर्म कुर्वन्ति। कृषीवलाः क्षेत्राणि हलैः कर्षन्ति। तेषां स्त्रियः पुत्राश्च कर्मसहायं कुर्वन्ति। ते दोहदभूसारादिभिः भूमिं संस्कृत्य धान्यबीजानि वपन्ति। सस्याङ्कुराणि च प्ररोपयन्ति। एवं प्ररोपितैः सस्यैरेव धान्यान्याहारवस्तूनि समुत्पद्यन्ते। आहारसमृद्धिर्भवति।

एवं मङ्गलारम्भं सफलं च प्रभातकालं नित्यं प्रशंसन्ति लोकाःस्त्रियो गायन्ति च। तासां बाला बालिकाश्च बालातपे खेलन्ति नृत्यन्ति सोल्लासम्॥

॥ हृद्यं संस्कृतम् ॥ ३ ॥

लोके संस्कृतं चिरन्तनाभाषा ननु। एषा यथा लोकभाषा तथा देवभाषा चेति वदन्ति। अत एवास्याः गैर्वाणी गीर्वाणभारतीत्यादीनि नामानि भवन्ति। तस्मात् संस्कृतं चिरन्तनमिति यथा ज्येष्ठं तथा अमरवाणीति श्रेष्ठं विद्यते। पूर्वं कदाचन संस्कृतं जनव्यवहारभाषाप्या-सीदिति इतिहासविदो मन्यन्ते। आधुनिका देशभाषाः प्रायेण संस्कृताज्जाताः अथवा परिपोषिता विद्यन्ते। प्राज्ञः कश्चन कविः गाथां गायति —

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती।
तस्यां हि काव्यं मधुरं तत्रापि च सुभाषितम् ॥ इति।

रामायणमादिकाव्यमिति लोकप्रसिद्धम्। महर्षिर्वाल्मीकिः पूर्वं तत्प्रथमं काव्यं विरच्यादिकविरिति परमं यशोऽलभत। भगवान् व्यासः कविवेधाः पुराणेतिहासं महाभारतमित्यादि व्यरचयत्। श्रीमद्भगवद्गीतायाः नाम को वार्यजनो न जानाति? सा गीता महाभारत ग्रन्थे ध्रुवतारेव राजते। पाणिनिर्नाम महामुनिः व्याकरणप्रणयनेन भाषायाः सुसंस्कृतं रूपमाविरकरोत्। अतएव संस्कृतमिति प्रथितम्।

भारतीयार्याणामस्माकं पूर्वजानां धर्मसंस्कृति स्रोतोमूलाः वेदोपनिषदः परापरविद्याविस्तरश्चेति विपुलं संस्कृतसाहित्यम्। तेषामध्ययनं परिचयो वा संस्कृताभ्यासेन विना दुश्शकमिति।

कविकुलगुरुः कालिदासः। महाकविर्भवभूतिः। रङ्ग रूपकाचार्यो भासः। प्रौढप्रतिभो भट्टबाणः। महात्मा जयदेवः। पण्डितराजो जगन्नाथः। महासूरिर्मल्लिनाथः। इत्यादयो महान्तोऽपरे विद्वत्-कवयः परश्शताः संस्कृतसाहित्यमन्दिरं सुतरामलमकुर्वन्। तेषां कृतिरत्नानि दृश्यश्रव्यसाहित्यानि विश्वविद्यामन्दिरे नक्षत्राणीव विद्योतन्ते। ते महाग्रन्थाः न केवलमस्मिन् भारतमण्डले किंतु द्वीप देशान्तरेष्वपि धीमतां विद्वद्रसिकानां मोदप्रमोदं वितन्वानाः प्रशंस्यमानाः सन्तीति संस्कृतस्य महिमानं किमु वर्णयामः॥ तत्सुष्ठूक्तं भर्तृहरिणा -यथा-

वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते ॥इत्यादि॥

॥ इष्टसाधनं विद्या ॥४॥

अस्ति काशी नम महत् पत्तनम्। तत्र पूर्वमेकः पण्डित आसीत्। विदुषस्तस्य द्वौ पुत्रावभवताम्। पिता तस्मै ज्येष्ठपुत्राय स्वार्जितं सकलं धनं प्रायच्छत्। कनिष्ठपुत्रं सकलासु विद्यासु पारङ्गतमकरोत्। एवमुभयोः पुत्रयोः स्वदायभागं विभज्य दत्वा आत्मानं कृतकृत्यं मत्वा च सः तीर्थयात्रायै गृहं त्यक्त्वा पर्यव्रजत्।

ततस्तौ पुत्रौ गृहस्थावभवताम्। सः ज्येष्ठपुत्रः अति व्ययमपव्ययं कुर्वन् स्वधनमक्षपयत्। अतः कतिपय दिनैः दरिद्रो भूत्वा दुःखभागभवत्। पुनः पुनः धनसङ्ग्रहोपायं तन्मार्गं वा सः न जानाति स्म।

स तु कनिष्ठः स्वविद्याबुद्धिबलेन धनं समार्जयत्। व्ययं कृत्वापि धनं दिने दिने शिष्यते स्म यतोऽतः सोऽल्प कालेन धनीभूत्वा सुखभागभवत्। अतोऽत्र लोके विद्वान् पुरुषः सुखमेधते। अस्त्यत्र सुभाषितम्।

विद्यानाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशस्सुखकरी विद्या गुरूणां गुरुः।

विद्या बन्धुजनो विदेशगमने विद्या परा देवता
विद्या राजसुपूजिता न तु धनं विद्याविहीनः पशुः ॥
विद्या शस्त्रस्य शास्त्रस्य द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥
विदुषः श्रीमतश्चैव नैव साम्यं कदाचन ।
स्वगृहे पूज्यते श्रीमान् विद्वान् सर्वत्र पूज्यते ॥
मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय खेदम् ।
कीर्तिं च दिक्षु विमलां वितनोति लक्ष्मीं
किं किं न साधयति कल्पलतेव विद्या ॥

## कालविवेकः ॥ ८ ॥

अद्य वर्तमानकालः। ह्यः भूतकालः। श्वः भविष्यत्कालः।

अद्य चन्द्रदेवस्य दिनम्। चन्द्रस्य सोमः इन्दुः इत्यादीनि नामानि सन्ति। अतः अद्यतनं दिनं सोमवासरः इन्दुवासरः इति व्यवहरन्ति।

ह्यः को वा वासरोऽभवत्? ह्यस्तनं सूर्यदेवस्य दिनमासीत्। सूर्यस्य भानुः रविः आदित्यः इत्यादीनि नामानि सन्ति। अतः गतं ह्यस्तनं दिनं भानुवासरः रविवासरः आदित्यवासरः इति नामभिः व्यपदिशन्ति।

श्वः को वा वासरो भविष्यति? श्वः भौमवासरो भविष्यति। भौमः भूमिपुत्रः। तस्य कुजः मङ्गलः इत्यपि नामानि सन्ति। अतः श्वस्तनं दिनं मङ्गलवासरः कुजवासरः भौमवासरः इत्यादिभिर्नामभिः कथयन्ति।

तर्हि परश्वः कः वासरः? परश्वः सौम्यवासरो भविष्यति। सोमपुत्रः सौम्यः। तस्य बुध इत्यपि नाम भवति। अतः चन्द्रपुत्रस्य दिनं बुधवासरः सौम्यवासरः इति वदन्ति।

तर्हि चन्द्रस्य बुधो यथा पुत्रः तथा सूर्यस्यापि पुत्रोऽस्ति किम तस्यापि दिनमस्ति किम् ? बाढमस्ति । शनिः सूर्यपुत्रः । शनेः मन्द इत्यपि नाम । अतस्तस्य दिनस्य शनिवासरः मन्द वासरः इति व्यवहारः भवति ।

बृहस्पतिर्देवगुरुः । तस्य दिने गुरुवासरः । दैत्यगुरुः शुक्रः । शुक्रस्य भार्गव इत्यापि नाम । अतस्तस्य दिनस्य भार्गववासरः शुक्रवासरः इति व्यपदेशः भवति ।

इत्थं च वासराः सप्त भवन्ति । तानाहत्य सप्ताहो भवति । गते गुरुवासरे अमावास्यातिथिरभवत् । आगामिनि भार्गव वासरे पूर्णमासी तिथिर्भविष्यति । शुक्लपक्षे पञ्चदश दिनानि कृष्णपक्षे पञ्च दशदिनानि, आहत्य त्रिंशद्दिनानि । त्रिंशद्भिः दिनैः मासः पूर्णो भवति । द्वादशभिर्मासैः एकः संवत्सरः पूर्णः स्यात् । शतसंवत्सरैः शतमानं पूर्णायुः ।

अथेदानीं वासरान् क्रमश उदाहरत । तिथीः गणयत ।

## ॥ पुण्यश्लोकः श्रीकृष्णः ॥ ६ ॥

अयं श्रीकृष्णः। बालकृष्णस्य माता यशोदा, पिता च नन्दो नाम गोपाधिपः। तस्य सत्याज्जनकौ देवकीवसुदेवौ। यशोदानन्दौ तु पोषकौ। बालकृष्णोऽतीववत्सलो यतोऽतः तस्मिन् मातापित्रोः गोकुलवासिनां सर्वेषामपि अतीव वात्सल्यमासीत्। कौमारे वयसि श्रीकृष्णो वयस्यानां सर्वेषामपि अत्यन्तं प्रियो मुखरश्च।

असौ आदौ गोवत्सानपालयत्। अनन्तरं च गोधेनूरगोपायत्। सः प्रत्यहं गोभ्यो वत्सेभ्यश्च तृणान्यचारयत्। यवस कडङ्गर पिण्याकादीन्यखादयत्। जल पानीयादिकं चापाययत्। अतश्च तस्य गोपालः गोविन्द इति च नामाभवत्।

तस्य मदनसुन्दरस्य श्रीरूपं वीरश्रियं वेणुवादनकौशल्यं च मेधाविनः कवयः गद्यपद्यैः बहुधा समश्लोकयन्।

एष दुरात्मा कंसः। श्रीकृष्णस्य मातुलोऽप्ययं शत्रुः। दुर्जनाश्रयः कंसः प्रजाः पीडयति स्म। साधून् गुरुमहत्तरानवमन्यते स्म। जनान् प्राणिनश्च सः बहुधा हिंसति स्म यतोऽत एव श्रीकृष्णः तस्मै क्रुध्यन् तं लोककण्टकं अघातयत्।

इमे पञ्च पाण्डवाः। एते साधवो वीराः श्रीकृष्णस्य बान्धवाः।

तेषु श्रीकृष्णः स्निह्यति बहुधोपकरोति स्म । तेषां पाण्डवानां कौरवैः शत्रुभि सह प्रवृत्ते महाभारतयुद्धे श्रीकृष्णः पार्थसारथिर्भूत्वा निर्विण्णायार्जुनाय कर्तव्यप्रज्ञां तत्त्वज्ञानं च उपदिश्य प्रोत्साहितेन तेनार्जुनेन महाबलान् शत्रून् समहारयत् । एवं श्रीकृष्णसहायेनैव पाण्डवाः दुर्जयान् क्षत्रियान् विजित्य लोके धर्मराज्यं समस्थापयन् ।

श्रीकृष्णो भारतस्य वीरपुत्रो महात्मा च । आर्यजनास्तु तं पुरुषोत्तमं भगवन्तं संमन्यन्ते ॥

॥ पुरावृत्तम् ॥ ७॥

पूर्वयुगे सूर्यवंश्यो बाहुको नाम राजा यदा राष्ट्रं प्रशास्ति स्म तदा तस्य प्रतिपक्ष्याः हैहयाः तालजङ्घाः यवनाः शकाः काम्बोजाः पारदाः पल्लवा इत्येते सर्वे मिथो मिलित्वा तं बहुकमभियुध्य पराजयामासुः। इत्थं राज्याद् भ्रंशितो बाहुकः अवरोधजनेन साकमरण्येषु प्रावसत्। तस्य भार्ये द्वेऽपि तमेवानुययतुः। कथञ्चित् महर्षेरौर्वभार्गवस्याश्रमं प्राप्य तत्र तेषु निवसत्सु कतिपयदिनेषु गच्छत्सु दैवात् स बाहुकः कालधर्ममनुययौ। तदा तस्य स्त्रीजनेषु सहगमनविधिना देहमुत्सृष्टेष्वपि तस्यान्यतरा भार्या तदानीं गर्भिणी यतोऽतस्तां स मुनिः सहगमनतो न्यषेधत। तत्पूर्वमेव द्वेषबुध्या सपत्न्या तस्याः गर्भनाशाय विषप्राशनं कृतमासीत्। अथापि विदितवृत्तस्य मुनेरनुग्रहेण सुरक्षितो गर्भः सकाले तेन गरेण सहैव सञ्जातोऽभवत्। अतः स क्षत्रियपुत्रः सगर इत्येव नाम्ना आख्यायत। स च सगरः गुरोरौर्वभार्गवस्य सकाशे कृतक्षत्रियोचितशुभसंस्कारः सन् धनुर्वेदादीन् साङ्गानधीत्य महर्षिणा विशेषानुग्रहदत्तमाग्नेयं दिव्यास्त्रं च लेभे। तेन प्राप्तोत्साहः सगरः पूर्ववैरिणः सञ्जिगीषुः सहैहयान् शकादीनभियुद्ध्य तानुच्छेत्तु-

मारभत। वीरस्य तस्य प्रतापेन शत्रवस्ते पराजिताः प्राणपरी-
प्सवः सगरपुरोहितं वसिष्ठर्षिं शरणमगच्छन्। स्वगुरुणा
तेभ्योऽभयं दत्तमिति ज्ञात्वा गुर्वनुज्ञापूर्वकं तेषां शत्रूणां आर्यधर्म
प्रवृत्तिमेव निराचकार। अर्थात् गुरुं वसिष्ठमनुज्ञाप्य शकादीनां
क्षत्रियोचितधर्माचरणं न्यषेधयत्। तत्राधारश्लोकाः —

धर्मं जघान तेषां वै वेषान्यत्वं चकार ह।
अर्धं शकानां शिरसो मुण्डं कृत्वा व्यसर्जयत्।
यवनानां शिरस्सर्वं काम्बोजानां तथैव च।
पारदा मुक्तकेशाश्च पप्लवाः श्मश्रुधारिणः।
निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना।
शका यवनकाम्बोजा पारदाश्च विशाम्पते।
कोलसर्पाः समहिषा दार्दाश्चोलाः सकेरलाः।
सर्वे ते क्षत्रियास्तात धर्मस्तेषां निराकृतः।
वसिष्ठवचनाद्राजन् सगरेण महात्मना॥

— महाभारते॥

## ॥ यशोधनः पण्डितः॥ ८ ॥

पुरासीदन्नभट्ट नामा तर्कशास्त्रपण्डितः। विद्यामात्रधनस्य तस्य
आर्थिकपरिस्थितिः शून्यप्रायासीत्। सदार्धनग्नस्य रिक्तोदरस्य तस
जीवनं कथञ्चिदयाचितलब्धवृत्त्या कष्टेन भवति स्म। अथापि
तस्य पाण्डित्यमहत्त्वं श्रुत्वा नाना दिग्देशेभ्य आगता अनेके छात्राः तद
न्तिके तर्कशास्त्रमधीयते स्म। एवं कतिपयकालोऽपगतः।

कदाचन कर्णाकर्णिकया प्रसृता वार्ता तेनापि श्रुता। यथा-
वाराणस्यां विद्वत्सम्मेलनं प्रवर्तते। तत्र सर्वेषु शास्त्रेषु वाक्यार्थ
प्रसङ्गा आयोजिताः। तत्र विजेतॄणां पण्डितानां प्रभूतः पुरस्कारो भवि
ष्यति। इत्येतया वार्तया अस्यान्नभट्टस्यापि तत्सम्मेलनं गन्तुं मनीषा
जाता। त्वरया वा कुतूहलवशाद्वा सः कस्याप्यनिवेद्यैव एकाकी रिक्त
हस्तः प्रातिष्ठत।

सुदूरप्रयाणे मार्गमध्ये काचन महानदी। तामुत्तीर्य गन्तव्यम्।
तद्धस्ते न धनमस्ति। भृतिद्रव्यं विना नाविकः न तारयति। अन्ते स
तार्किकः नाविकसमीपं गत्वावदत् - यदहमिदानीं वाराणसीं गच्छामि
तत्र विद्वत्सभायां यन्मया द्रव्यजातं प्राप्यते, ततः प्रत्यागमनसमये
द्विगुणं तरपण्यं तुभ्यं निर्यातयिष्यामि, इदानीं मां परं पारं प्रापयेति

तद्वचनं श्रुत्वा स नाविकः उच्चैर्जहास । हसन्नेव पुनः प्राह – भोः, किं भवन्तः आत्मानमन्नभट्टं मन्यन्ते । यत्तत्र पारितोषिकलाभमात्मनो विश्वसिथेति पर्यहसत् ।

तस्य वचनं श्रुत्वा स पण्डितो न चुकोप, न वा भग्नमनोरथोऽभवत् । किं तु मनस्येवं समतुष्यत् – यदयं प्राकृतोऽपि जनः मम नाम जानाति इति चेत् स्वकीर्तिर्लोकविश्रुता, मम लब्धव्यं लब्धमेवेति सन्तुष्टमनाः विद्वत्सभामगत्वैव तत एव न्यवर्तत ।

तेनान्नभट्टेन विरचितः तर्कसङ्ग्रहदीपिकाख्यो ग्रन्थः अद्यापि तर्कविद्यार्थिभिः अधीयते ॥

## ॥ दैवी विचित्रा गतिः ॥ ९ ॥

अवन्तीनगरे वसुगुप्तो नाम कश्चिद् धनिक आसीत् । श्रीम-
त्कुलप्रसूतः सः त्यागभोगादिषु वार्तासु अतीवोदारः अत एव कति-
पयदिनेषु स्वसम्पदं निश्शेषं व्ययित्वा क्रमेण निर्धनोऽभवत् ।
यदा तस्य जीविकैव दुर्भरासीत्तदा सः संस्थाविपणिमार्गे भृतिभृत्यो
भूत्वा तेन भृतिद्रव्येण कथञ्चित् कालं नयति स्म । एवं स्थित एकदा
सुश्रान्तो रात्रौ सचिन्तश्शयानः स निद्रायां स्वप्नमेकं ददर्श । स्वप्ने
कश्चन पुरुष एनं सम्बोध्य प्राह – अये, त्वं यद्यात्मनो भाग्यं काम-
यसे तर्हि गच्छ नागपुरम् । तत्र तवेष्टप्राप्तिर्भविष्यतीति । ततः
प्रबुद्धः सः स्वप्नं यथार्थं मन्वानः तत्प्रातरेव नागपुरं प्रति प्राचलत् ।
सायङ्काले तत्पुरं प्राप्य सः धर्मशालायां कचन प्रसुप्तो निद्रां नि-
र्विशति स्म । दैवात्तन्निशीथे तस्या धर्मशालायाः प्रतिवेशे कश्चन
चोरः अन्तः प्रविश्य स्वकृत्यं कुर्वाणो यदा तदा तत्कृतशब्देन गृह
जनो निद्राभङ्गं प्राप्य चोरभयात् सहसोच्चैः व्यक्रोशत् । तच्छब्दं
श्रुत्वा यामिका रक्षाधिकृताः यावत्तत्रागत्य परिपश्यन्ति तावच्चोरः सः
दूरे पलायितोऽन्तर्हितश्च । तदन्वेषणाय रक्षिणस्ते इतस्ततः परि
चरन्तो धर्मशालायां प्रसुप्तं तमपरिचितं वसुगुप्तमेव चोरं मत्वा

बहुधा सन्ताड्य निगृह्य च कारागारे न्यक्षिपन् । द्वित्रिदिनपर्यन्तं भृशं दण्डितं तं वसुगुप्तं कारापतिराकारयित्वा समपृच्छत् -भोः त्वं कः ? कुत्रत्यः ? किमर्थमत्रागतश्चेति । तदा स वसुगुप्तः आत्मनः स्वप्नदर्शनं तत्प्रत्ययेन च तत्रागमनमिति निवेद्य निरपराधस्यात्मनः दुस्थितिं सदैन्यं व्यज्ञापयत् । तद्वचनं श्रुत्वा कारापतिरुच्चैर्जहास प्राह च -रे मूढ, ममाप्येवमेव स्वप्ने पुरुष आगत्य अवन्तीनगरे एतादृशगृहे ईदृक्प्रदेशे भूनिधिरास्ति तत्र त्वं गत्वा संगृहाणेति स्थलनिर्देशपुरस्सरमुवाच । अहं तु न स्वप्नस्य विश्वसिमि । अत एवाहं तत्र न गतः । त्वं तु मूढमतिः द्रव्यलोभाद्दूरमागत्य क्लेशभागासीः । न पुनरेवं कुर्विति प्रबोध्य तं बन्धनात् मुमोच । मार्गव्ययार्थं किञ्चिद्द्रव्यं च दत्वा स्वस्थानं गच्छेति प्रस्थापयामास । ततो वसुगुप्तः स्वगृहं प्रत्यागत्य कारापतिनिर्दिष्टस्थलं प्रत्यभिज्ञाय तत्र पर्यखनत् । तत्र भूम्यन्तर्निक्षिप्तं प्रभूतद्रव्यं दृष्ट्वा तत् स्वीचकार । तल्लाभेनानन्दितश्च सः तत सुखेन जीवति स्म । अतोऽहं ब्रवीमि दैवी विचित्रा गतिरिति ॥

॥ परोपकारार्थमिदं शरीरम् ॥१०॥

महाविष्णूपदेशमनुवर्तमाना देवाः अश्विनेयौ पुरस्कृत्य महर्षेर्दधीच आश्रमं प्रययुः। यदृच्छागतान् सर्वान् देवान् स्वागतवचनैः अभिनन्द्य स महर्षिः आगमनकारणमपृच्छत्। तदा शक्रः स्वयमेव लोकेषु वृत्रासुरोपद्रवं निवेदयित्वा तन्निग्रहोऽपि भवदस्थ्ना विना न शक्य इत्यतस्तत्प्रार्थनायैव स्वागमनमिति व्यज्ञापयत्। तच्छ्रुत्वा दध्यङ् ऋषिः सस्मितं प्राह :- अर्थिनो नैव जानन्ति प्रायेण परवेदनामिति वाचोयुक्तिः इदानीमवितथाभवत्। भवतां कांक्षितमपि कथमहं स्वकलेवरं निखिलपुरुषार्थसाधनमेकपदे उत्सृजेयमिति पर्यपृच्छत्। तदा तच्छिष्यौ देवभिषजौ आश्विनेयौ पुर आगत्य गुरुचरणयोरभिवादनपुरस्सरं व्यज्ञापयताम् - भो भगवन्, परमार्थेऽत्र सिद्धे किमतःपरं कांक्षणीयं भविष्यति। सकललोकोपकृतये देवप्रार्थना सफलीक्रियतामिति प्रार्थयेताम्। ततस्सर्वेषामाशयमभिज्ञाय स योगीश्वरो दध्यङ् मनसि गुरुलाघवं निश्चित्य प्रोवाच - अहो भाग्यम्। श्रीविष्णुप्रेरणया ममायं सुयोगः प्राप्तः। एकान्तविध्वंसिना कायेन नातःपरतरो लाभो भविष्यति। अत इदानीं युष्मन्मनीषितं सम्पद्यताम्। मम महाविष्णुः प्रीयताम्।

इत्युक्त्वा स महात्मा समाध्यासनमध्यस्य योगधारणक्रमेण स्वप्राणानुदक्रामयत्। देहं च विससर्ज। एवं स योगी सर्व देवसमक्षं परंधाम सायुज्यमगच्छत्।

ततः कृतकृत्यास्ते देवा इन्द्रपुरोगाः देवशिल्पिनं विश्वकर्माणमाहूय दध्यङ्देहास्थिभिः वज्रादिकानि नाना आयुधानि निरमापयन्।

तपोब्रह्मतेजोगरिष्ठेन वज्रायुधेन उत्तेजितः शक्रः वृत्रासुरेण नियुध्य लीलयैव तमसुरं जघान। इत्थं पुरा महात्मनो दधीचः त्यागेन देवलोको मनुष्यलोकश्च सुपालितोऽभवदिति पुराणवचनमस्ति॥

कर्णः कर्णं शिबिर्मांसं जीवं जीमूतवाहनः।
परोपकृतये तेषां नास्त्यदेयं महात्मनाम्॥

जयपराजयः। शिरसो मूल्यम् ॥ ११ ॥

आसीत्पुरा कोसलानां राजा पुरञ्जनोपाह्वयः। सः स्वगुणैः धर्मवीर्यदयौदार्यादिभिः लोकप्रियः प्रसिद्धश्च। तं दीनबन्धुरिति समाद्रियन्त जनाः। एवं तस्य गौरवाभ्युदयं प्रत्यसहनः काशीराज तस्मै असूयाति स्म तस्य शुभगुणानपवदति च। यदा स्वप्रजा अपि समसमक्षं कोसलमश्लाघन्त तदा तेन नासह्यत। स सभायामु- दघोषयत् :- नाकस्मिकमौदार्यमहत्वं नाम। वयं तु न सहामहे तस्य कोसलस्य डम्भाचरणम्। अतः भोः सैनिकाः, शीघ्रं निर्गच्छत कोसलावस्कन्दाय। अहमत्राग्रेसरो भविष्यामि। कतरोऽत्र महानिति खड्ग एव निर्णयं करोतु। इति सपरिच्छ सन्नद्धो दण्डयात्रायै प्रातिष्ठत।

रणाङ्गणे घोरं युद्धमभवत्। अचिरेणैवावसितं च। युद्धे प्रक्षीणः कोसलोऽन्ते प्राणपरीप्सया दूरं प्रधाव्य क्वापि गहने व्यलीयत। इतो विजयी काश्यस्तु कोसल राज्ये प्रत्यागतः स्वां स्वविजयमुदघोष- यत्। औदार्यमहत्वं वीरस्यैव शोभते प्रथते चेति तद्भाषणं श्रुत्वा विषदपूर्णः प्रजालोकस्तन्नान्वमोदत। जनास्त्वेवं मिथो

मन्त्रयन्ते - अहो, साधुर्भग्नः। भगवतो न्यायनियमश्च विपरीतो जातः। अत इदानीं प्रलयकालः सन्निहितो भवेदिति।

जनानां मानसेङ्गितं विज्ञाय काशीराजस्य मन्युः पुनरपि समुदज्वलत्। सः प्रमत्तो भूत्वा प्रोवाच - तं वराकं किमर्थमेवं परिवेदयन्ति जनाः। अहमत्र न किमपि भवामि। न कोऽप्यत्र मद्योग्यतां जानाति। अथवा सर्वमेतत् तस्यैव कीनाशस्य काचनोपाधिः स्यात्। भवतु तस्य प्रतिकरिष्यामि। सर्वथा स शत्रुरुन्मूलयितव्यः। इति निश्चित्य तत्क्षणे दूतान् प्रति राज्ये सर्वत्र घोषणां कुरुत - कोसलं गृहीत्वा योऽर्पयति तस्मै सुवर्णसहस्रं दीयते इति। तद्राजशासनमनुपदमेव दूतैः प्रथितं कृतम्। तदप्रियघोषणश्रवणासहैर्जनैः कर्णपिधानमाचरितम्।

दूरे कान्तारे स कोसलः क्षुधितस्तृषितश्च परिभ्रमति स्म। कदाचन तत्रागतः कश्चन पान्थस्तं प्रति कोसलराजधानीमार्गमपृच्छत्। किमर्थं तत्र जिगमिषसीति तेन पृष्टः स पान्थः प्रत्युवाच - अहमासं वणिग्वृत्तिः। सागरे प्रवहणभङ्गेन मदीया सकला सम्पत् प्रनष्टा। अहमिदानीं निःस्वः। लोके

कोसलः खलु दीननाथः। स एव शरणं मम दीनस्य। अतस्त-
महं द्रष्टुमिच्छामीति वदतस्तस्य शृण्वन् स कोसलः सहसा
गतं बाष्पं निगृह्य उच्चैः जहास। क्षणं विचिन्त्य तस्मै प्रोवाच :-
भद्र, तवाभीष्टसिद्धये त्वामहमेव तत्र नयामि। मामन्वागच्छेति
तं सहैवादाय प्राचलत्। राजधान्यां राजभवने काश्यं दृष्ट्वा
प्रणतिपुरस्सरमिदमाह - भोः, पूर्वमहमासं कोसलानां राज
अद्य कोसलराजं गृहीत्वार्पयित्रे सुवर्णसहस्रं दास्यामीति
भवता प्रतिश्रुतमास्ति किल। तदस्मै मम सहवर्तिने सहस्र
द्रव्यं दत्वा स्ववचनं पालय इति।

सभायां सर्वे निर्निमेषमीक्षन्ते स्म। राजवल्लभाः सैनिका अपि
सव्यग्राः सोत्कण्ठा आसन्। क्षणं स्तब्धप्रायम्। राजा काश्योऽपि
तमागन्तुकं क्षणं निर्वर्ण्य शनैः स्वासनादुत्तस्थौ। मन्दमुपसृत्य
सस्मेरमिदं बभाषे :- बन्दिन्, त्वं मृत्युमाश्लिष्यापि स्वजय
मेवाशंससे किम्! किंतु तव मनीषां नाहं सफलीकरोमि।
अद्यतनो जयो मदीयोऽस्तु। इति तद्धस्तं गृहीत्वादाय तं
सिंहासने उपवेशयत्। तस्य धूसरकेशे मस्तके किरीटं च
अलंच्चकार। आह च - इमं कोसलराज्यं तुभ्यं प्रत्यर्पयामि

स्वीकुरु मम च हृदयेन सहाऽइति ।

तदा हर्षनिर्भरा महाजनाः उभयोरविशेषं जयघोषेण नभोमण्डलं पूरयामासुः ॥

॥ रवीन्द्रनाथ ठाकुरस्य अनुवादः ॥

## ।अनूचानो याज्ञवल्क्यः॥१२॥

आसीत् पुरा याज्ञवल्क्यो नाम महात्मा। कुटुम्बिनस्तस्य द्वे भार्ये बभूवतुः। स च मनीषी तपस्स्वाध्यायनिरतो नित्यं तत्त्व विचारतत्परश्च। अथ च स संसारे विरज्य प्रव्रजितुमियेष। तदा स्वोपकरणं धनद्रव्यसर्वस्वं द्विधा विभज्य कुटुम्बिन्योर्द्वयोरपि वृत्त्युपायार्थं दत्वा च आत्मनो व्युत्थानायानुमतिं दत्तमित्युवाच।

द्वयोरन्यतरा कात्यायनी पत्युः समतुष्यत्। इतरा पटुमति- मैत्रेयी पतिं प्राह - भगवन्, अमृतत्वाय ननु भवान् इह सर्वं त्यक्त्वा प्रव्रजति। भवता त्यक्तं, यन्मह्यं दत्तं, तेन ममाप्यमृतत्वं सिध्यति किम्?

न न। इति होवाच याज्ञवल्क्यो यथोपकरणवतां जीवितं तथैव जीवितं ते स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति।

पुनरप्यन्वयुङ्क्त मैत्रेयी :- तर्हि भगवन्, येनाहं नामृता स्यां किमहं तेन कुर्यां, यदेव भवानमृतत्वसाधनं वेद तदेव मे ब्रूहीति।

पटुप्रश्नेन सुप्रीतो भगवानुवाच :- प्रिया बतारे नः सती प्रियं भाषसे एह्यास्व ते व्याख्यास्यामि :- लोके न तावत्सर्वेषां कामाय सर्वाणि प्रियाणि भवन्ति, आत्मनस्तु कामाय सर्वाणि प्रियाणि भवन्ति। अत आत्मा हि प्रेयान्। तदनभिज्ञो जनः भोगोपलब्धिं सुखं

मन्वानो बाह्यवस्तुषु इदं प्रियमिदं प्रियमिति तदनुवर्तमानो
आत्ममायया व्यामुह्यते । प्रियतममात्मानं विस्मृत्य बहिर्मुखः
वार्ताव्यवहारे निमग्नश्च भूयोभूयः संसारे परिभ्रमति ।

अनात्मन्यात्माभिमान एव शोकमोहकारणम् । सा चाविद्या ।
आत्मन्येवात्मबुद्धिर्विद्या । तय विद्यया केवलमात्मानमधिगच्छेत
तदा वास्तवं सुखमात्मन्येव परत्र सुखाभासताकेवलं, तदाभास-
मेव वास्तवं मन्यमानोऽज्ञानी विषयाननुधावति इति विज्ञायते ।
अतश्च अयमात्मा ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्मेति, विज्ञानमानन्दं
ब्रह्मेति च परमार्थतत्त्वं साक्षादपरोक्षं भवति ।

द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च । मूर्तं स्थूलं, तत् कार्य
रूपम् । अमूर्तं सूक्ष्मं, तत् कारणरूपम् । कारणविकारो ननु
कार्यं, तत् विनाशि क्षणिकं तुच्छं च । मिथ्या च । सत्यं तु मूल
कारणं तद् ब्रह्म । स आत्मा चेतनः । कार्यं सर्वमचेतनं विनाशि च
अविनाशी वारे अयमात्मा अनुच्छित्तिधर्मा । स भूमाद्वितीयः ।
स यथा सैन्धवघनो रसघन एवं वा अरेऽयमात्मानन्तरोऽबाह्यः
कृत्स्नः प्रज्ञानघन एव । अस्य महतो भूतस्यात्मनः सर्वाणि भूतानि
निःश्वसितानि । स सर्वेषामेकायनम् । यत्र हि द्वैतमिव भवति

तदितर इतरं पश्यति विजानातिचायत्र वा अस्य (पुरुषस्य) सर्वमात्मैवाभूत् तत्केन कं पश्येत्, कं विजानीयात्। अद्वैतो भवति चेतनात्मा। येन सर्वं विजानीयात् तं केन विजानीयात् विज्ञातारम्। अतश्च सर्वान्तरात्मानंदमद्वैतं ब्रह्म। तस्मादात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। तस्यात्मनो दर्शनेन श्रवणेन मत्या विज्ञानेन सर्वमिदं विश्वं विदितं भवति। इत्युक्तानुशासनासि, एतावदरे खल्वमृतत्वमिति बोधयामास याज्ञवल्क्यः॥ ॐ॥

॥भारविः॥१३॥

पण्डितप्रवरपुत्रो भारविः बाल्ये कौमारे वयसि प्रयतो नियतश्च सम्यक् शास्त्रविद्याध्ययनं कृत्वा विद्यासु वयसि च प्रौढोऽभवत्। अतश्च विद्यापारगः सः स्वपितरमपि पाण्डित्ये अत्यशयिष्ट। तत्पितुः समीपं ये केचन विद्वांसः शास्त्रवाक्यार्थं कर्तुकामाः आगच्छन्ति, तैः सह भारविः स्वयमेव प्रसङ्गं कृत्वा तान् पराजयति स्म। एवं वारं वारं वाक्यार्थप्रसङ्गेषु पण्डितान् पराजित्य क्रमेण भारवेः अहङ्कारः समजायत व्यवर्धत च। सः स्वयमेव विद्वन्मूर्धन्य इत्युत्सिक्तोऽभवत्। एषोऽहङ्कारः पुत्रस्य शुभोदर्कं विघटयतीति सम्पश्यन् तत्पिता पुत्रं भारविं सर्वजनसमक्षमेव त्वं गर्दभ इव मूर्ख इति निन्दितुमारभत। पदे पदे पितृकृतं स्वावहेलनं श्रुत्वा श्रुत्वा भारवेः पितरि द्वेषबुद्धिरजायत। यद्ययं पिता जीवति स्वस्य यशोगौरवं न स्यात्। धिक्कारोऽयं सोढुमशक्यः। अतः कथञ्चित् तदभाव एव साधयितव्य इति निश्चित्य तदुपायं समयं च प्रतिपालयति स्म। अथ च कदाचन निशीथे तद्वधार्थं बृहच्छिलाघनमेकं गृहीत्वा पितुः शयनगृहसमीपं गतः सः अन्तर्भागे संलापशब्दमशृणोत्।

तत्र जननी वदति :- स्वामिन्, पुत्रो भारविः प्रौढो जातः। सन्निहिता तद्वधूश्च। सा सर्वं विजानाति। अत इदानीं जनसमक्षे पुत्रस्य तिरस्कारो नोचितः। कदाचन कुपितः पुत्रः मानर्थमाचरिष्यत्। तदुत्तरत्वेन पिता भणति :- अयि, पुत्रस्य पाण्डित्यं प्रति त्वत्तोऽपि ममाधिकः सन्तोषः। किंतु विद्या विनयेन शोभते खलु। गर्वं त्याजयित्वा तस्य साधुतागुणाधानायैव ममैषः शिक्षणप्रयोगः।

इति तयोः सम्भाषणं श्रुत्वा भारविः पातालनिपतित इव एडमूक अभवत्। पश्चादतप्यत ततश्च निश्शब्दं तूष्णीं न्यवर्तत।

ततः प्रातः पितृसविधे वार्ताकथाप्रसङ्गे सापदेशमिव प्रश्नमपृच्छत् - गुरुवधसङ्कल्पस्य पापस्य किं प्रायश्चित्तमिति।

तावतैव पिता विषयं ज्ञातवान्। शृणु, तस्य पापस्य प्रायश्चित्तं - एकाब्दपूर्णपर्यन्तं श्वशुरगृहनिवास एव निष्कृतिः।

परेद्युः स्वभार्यया साकं भारविः मातापितरावनुज्ञाप्य श्वशुरगृहं ग्रामान्तरं प्रययौ। अकस्मादागतौ दुहितृजामातरौ दृष्ट्वा तद्गृहजनस्याश्चर्यमासीत्। न तद्धनवद्गृहम्। अथापि जामातेति गौरवेण त्रिचतुराणि दिनानि यावत् सत्कारो भोजनादिकं च प्रावर्तत। तदुपर्यपि जामातृदेवस्य निष्क्रमणसूचना नासीत्। परिपृष्टा दुहितापि

नाहं किञ्चिद्वेद्मि इति प्रोवाच । तदा खल्वनादरः पर्यदृश्यत । गृहजनाः सर्वेऽपि औदासीन्यमेव प्रादर्शयन् । एवमवमाननपरम्परान्ते भारविपण्डितस्य श्वशुरगृहे गोचारणकर्मणि नियुक्तिरासीत् । भारविस्तु प्रायश्चित्तदृष्ट्या सर्वमप्यसहत । प्रत्यहं प्रातरेव पर्यूषितमन्नं खात्वा गोमहिष्यादीन् पशून् नीत्वारण्ये चारयित्वा सायं समये प्रत्यागच्छति स्म । नैतावदेव दुःखम् । मध्ये मध्ये श्वश्रूः दुहितृमुखेन धनं याचते स्म । तद्धस्ते तु न धनमासीत् । ततश्च व्यङ्ग्यतिरस्कारः निष्ठुरोक्तिः गालीशब्दप्रयोगः इत्येवं नानाविध निकारान्ते मातृबलात्कारेण प्रेरितया पत्न्या धनार्थं प्रपीडितो भारवि स्वकृतं श्लोकमेकं तालीपत्रलिखितं दत्वा इदं विक्रीय लब्धं धनं गृह्यतामित्युक्त्वा प्रैषयत् । सा श्वश्रूः तं श्लोकं संस्थाश्रेण्यां विक्रीय शताधिकरूप्यकाणि समपादयत् । भारविस्तु दैनिकं कर्म यथास्थितम् ।

यस्तं श्लोकं मूल्येन गृहीतवान् स तु वणिग्वृत्तिः महाधनिक आसीत् । स च तत् श्लोकपत्रं स्वशयनगृहे कुड्योपरिभागेऽस्थापयत् । दिनान्तरे सः स्वव्यवहारार्थं देशान्तरं प्राचलत् । कतिपयदिनानन्तरं प्रवासात् निशीथसमये स्वगृहाय प्रतिनिवृत्तः किंकरैरन्तः प्रवेशितश्च । सः शयनगृहं प्रविश्य यावत् पश्यति तदा तत्र कश्चन

तरुणः पुरुषोऽपि प्रसुप्तः। तदा स्वभार्याशीलशङ्कितः सहसा मन्युपरीतश्च तद्वधाय खड्गमूर्ध्वमुद्धृतवान्। उपरिभागे खड्गसङ्घट्टनेन कुड्यलम्बितं तत्तालीपत्रं पादप्रान्तेऽपतत्। तदुद्धृत्य तत्रस्थं श्लोकं

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥

इत्यनुवाचितवान्। तदर्थं च विभाव्य क्षणं व्यरमत प्रहारात्। ततो भार्यां प्रबोध्य कुत्रत्योऽयं पुरुष इति पप्रच्छ। अये, अयमावयोः कुमार इति सा तं सन्दर्शयामास। अतश्च स धनिको विस्मयचकितः हन्त, प्रत्युज्जीवितोऽस्मीति निःश्वसन् कान्तायै स्वमनोगतमवेदयत्। परेद्युः श्लोकोपकारं संस्मरन् श्लोकरचयित्रे कृतज्ञतापुरस्कारं निवेदयाम इति सङ्कल्प्य सकुटुम्बस्तदन्वेषणाय प्रातिष्ठत।

तावति समये संवत्सरः पूर्ण आसीत्। अनुभूतप्रायश्चित्तो भारविः सपत्नीकः श्वशुरगृहात् स्वग्रामगृहं प्राप्त आसीत्। तमेवान्वेषमाणः स धनिकः भारविगृहमागत्य स्वोदन्तनिवेदनपूर्वकं कृतज्ञतां पुरस्कारनिधिं चार्पयामास। स चैष श्लोकोऽद्यापि महाकविविरचिते किरातार्जुनीयकाव्ये द्रष्टुमुपलभ्यते॥

## ॥सूरिर्मल्लिनाथः॥१४॥

त्रिलिङ्गदेशे कश्चिद्विपश्चिदासीत्। तस्य मल्लिनाथो नाम पुत्रो जातः। तस्य बाल्य एव पिता दिवं गतः, नासीदन्यो निर्देशकः अतः पुस्तकमुखमदृष्ट्वैव तस्य दिनान्यत्यक्रामन्। क्रमेण प्रौढः सः तरुणोऽभवत्। निर्विद्योऽपि सः दृढसुन्दराङ्गः श्रीमान् कुलपुत्रः इत्यादि तद्वृत्तं विचारेण ज्ञात्वा परग्रामवासी कश्चन गृहस्थः स्वकन्यां तस्मै दत्वा विवाहमकरोत्। सुरूपां भार्यां प्राप्य मुदितो मल्लिनाथः स्वगृहे कुटुम्बजीवनं सुखेन वर्तयामास। अथ च युगादिपर्वमुद्दिश्य श्वशुरेणाहूतः सः कान्तया साकं श्वशुरकुलं प्रययौ। तस्मिन् गृहे सर्वेऽपि विद्यावन्त आसन्। पर्वदिने उत्सवः प्रावर्तत। संल्लापविनोदाः प्राचलन्। मध्यान्हे मृष्टभोजनमभवत्। ताम्बूलसेवनमवासितम्। अनन्तरं एकैकः श्यालकः एकमेकं ग्रन्थं मल्लिनाथस्य हस्ते दत्वा भवता इदं पठितं किं इति पृच्छति स्म। तदा सः पुस्तकस्य सर्वाणि पुटानि पर्यावृत्य समग्रमेवेदमित्युत्तरमवदत्। तदा कनिष्ठः श्यालः किमप्यलिखितं पुस्तकं दत्वा इदं पठितं किमिति पृष्टवान्। तस्य तदेवोत्तरं श्रुत्वा सर्वे उच्चैः पर्यहसन्। मल्लिनाथस्य

अवमानेन मुखमवनमितवान्। एवं तद्दिनं गतम्। परेद्यवि सर्वान् संमन्त्र्य मल्लिनाथः पत्न्या साकं पादचारेणैव स्वग्रामाय प्राचलत्। प्रयाणसमये सः पार्श्वस्थितं पुष्पितं किंशुकवृक्षं प्रादर्शयत्- अस्य पुष्पस्य रामणीयकं पश्येति। सा तद्विलोक्य प्राह - अहह, धिक् तत्पुष्पम्। सौरभरहितमिदं किंशुकं विद्याश्रीशून्यपुरुषस्य मुखमिव नैव शोभते। इति तस्याः वचनेन पुनरप्यतीव खिन्नः सन् मल्लिनाथस्तत एव निवृत्य तां भार्यां पुनः श्वशुरगृहमेव प्रापय्य स्वयं काशीं गमिष्यामीत्युक्त्वा निरगच्छत्।

विद्यार्जनमवश्यकर्तव्यमिति तस्य मनसि दृढः सङ्कल्प उदियाय। स काशीं गत्वा कंचनोपाध्यायं सविनयमुपसृत्य स्वमनीषितं व्यज्ञापयत्। एष तु तरुणः, अस्य कथं विद्याधिगमः इति सन्दिहान एव स उपाध्यायः प्राह- सोम्य, भवतु। त्वामह मध्यापयामीत्युक्त्वा तं शिष्यमङ्गी चकार। सः स्वगृहिणीं प्रति उपांशु अस्य छात्रस्य भोजने प्रत्यहं निम्बतैलं यच्छ। अयं यदा भोजनं तिक्तमिति वदति तदा मम निवेदयेत्यादिशत्।

ततो विद्याशिक्षणं प्रावर्तत। मल्लिनाथः श्रद्धया अवधानेन च

गुरूदितं शृणोति मननं च करोति स्म। सोऽन्यविषये भोजनेऽपि न मनः कृत्वाहर्निशं विद्याचिन्तनमेवाकरोत्। आदितः काव्यपाठः शास्त्रपाठः भाष्यपाठः इत्येवं क्रमेण प्रायः अष्टवर्षपर्यन्तं नियतोऽभ्यस्य सकलासु विद्यासु पण्डितोऽभवत्। एकस्मिन् दिने भोजनं कुर्वन् सः- मातः, अद्य अन्नं किमिति तिक्तमिति पप्रच्छ। सा तस्योत्तरमदत्वा अन्यदन्नं पर्यवेषयत्। पतिसमीपे अद्य भवतः शिष्यः अन्नं तिक्तमिति प्रोवाचेत्याह।

परेद्युः स गुरुः मल्लिनाथमाकारयित्वा- सौम्य, अद्य त्वं विद्वानसि। अलमिदानीं शिक्षणक्लेशेन। भवान् स्वगृहं गन्तुमर्हसि इत्याशीःपुरस्सरमनुज्ञां दत्वा तं प्रेषयत्।

स्वभार्यां नेतुमागतमावुत्तं सम्भाषणेनैव विद्वांसं मत्वा तं सम-मानयन्। ततः स्वगृहं प्रत्यागतो मल्लिनाथः ग्रामे देशे च विद्-गौरवं प्रापत्। क्रमेण गुरुकुलेषु राजसभासु च सूरिरिति तस्-बिरुदपट्टं वितीर्य संमानमकुर्वन्। सोऽयं मल्लिनाथः कालि-दासादिमहाकविकृतानां काव्यग्रन्थानां समीचीनव्याख्यानानि लिखित्वा लोकोपकारं कृत्वा परमं यशोऽलभत॥